॥ निरालम्बोपनिषत् ॥

यत्रालम्बालम्बिभावो विद्यते न कदाचन ।
ज्ञविज्ञसम्यग्ज्ञालम्बं निरालम्बं हरिं भजे ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ नमः शिवाय गुरवे सच्चिदानन्द मूर्तये ।
निष्प्रपञ्चाय शान्ताय निरालम्बाय तेजसे ॥

निरालम्बं समाश्रित्य सालम्बं विजहाति यः ।
स संन्यासी च योगी च कैवल्यं पदमश्नुते ।
एषमज्ञानजन्तूनां समस्तारिष्टशान्तये ।
यद्यद्बोद्धव्यमखिलं तदाशङ्क्य ब्रवीम्यहम् ॥

किं ब्रह्म । क ईश्वरः । को जीवः । का प्रकृतिः ।
कः परमात्मा । को ब्रह्मा । को विष्णुः । को रुद्रः ।
क इन्द्रः । कः शमनः । कः सूर्यः । कश्चन्द्रः ।
के सुराः । के असुराः । के पिशाचाः । के मनुष्याः ।
काः स्त्रियः । के पश्वादयः । किं स्थावरम् ।
के ब्राह्मणादयः । का जातिः । किं कर्म । किमकर्म ।
किं ज्ञानम् । किमज्ञानम् । किं सुखम् । किं दुःखम् ।
कः स्वर्गः । को नरकः । को बन्धः । को मोक्षः ।
क उपास्यः । कः शिष्यः । को विद्वान् । को मूढः ।
किमासुरम् । किं तपः । किं परमं पदम् ।
किं ग्राह्यम् । किमग्राह्यम् । कः संन्यासीत्याहशङ्क्याह
ब्रह्मेति । स होवाच महदहङ्कारपृथिव्यप्तेजोवाय्वाकाशत्वेन
बृहद्रूपेणाण्डकोशेन कर्मज्ञानार्थरूपतया
भासमानमद्वितीयमखिलोपाधिविनिर्मुक्तं
तत्सकलशक्त्युपबृंहितमनाद्यनन्तं
शुद्धं शिवं शान्तं निर्गुणमित्यादि-
वाच्यमनिर्वाच्यं चैतन्यं ब्रह्म ॥ ईश्वर इति च ॥

ब्रह्मैव स्वशक्तिं प्रकृत्यभिधेयामाश्रित्य
लोकान्सृष्ट्वा प्रविश्यान्तर्यामित्वेन ब्रह्मादीनां

बुद्धीन्द्रियनियन्तृत्वादीश्वरः ॥ जीव इति च
ब्रह्मविष्ण्वीशानेन्द्रादीनां नामरूपद्वारा
स्थूलोऽहमिति मिथ्याध्यासवशाज्जीवः ।सोऽहमेकोऽपि
देहारम्भकभेदवशाद्बहुजीवः । प्रकृतिरिति च
ब्रह्मणः सकाशान्नानाविचित्रजगन्निर्माण-
सामार्थ्यबुद्धिरूपा ब्रह्मशक्तिरेव प्रकृतिः ।
परमात्मेति च देहादेः परतरत्वद्ब्राह्मैव  परमात्मा
स ब्रह्मा स विष्णुः स इन्द्रः स शमनः स सूर्यः
स चन्द्रस्ते सुरास्ते असुरास्ते पिशाचास्ते मनुष्यास्ताः
स्त्रियस्ते पश्वादयस्तत्स्थावरं ते ब्राह्मणादयः ।
सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन । जातिरिति च ।
न चर्मणो न रक्तस्य न मांसस्य न चास्थिनः ।
न जातिरात्मनो जातिर्व्यवहारप्रकल्पिता । कर्मेति च
क्रियमाणेन्द्रियैः कर्मण्यहं करोमीत्यध्यात्मनिष्ठतया
कृतं कर्मैव कर्म । अकर्मेति च कर्तृत्वभोक्तृत्वा-
द्यहङ्कारतया बन्धरूपं जन्मादिकारणं
नित्यनैमित्तिकयागव्रततपोदानादिषु फलाभिसन्धानं
यत्तदकर्म ।
ज्ञानमिति च देहेन्द्रियनिग्रहसद्गुरूपासन-
श्रवणमननिदिध्यासनैर्यद्यद्दृग्दृश्यस्वरूपं
सर्वान्तरस्थं सर्वसमं घटपटादिपदार्थ-
मिवाविकारं विकारेषु चैतन्यं विना किञ्चिन्नास्तीति
साक्षात्कारानुभवो ज्ञानम् । अज्ञानमिति च
रज्जौ सर्पभ्रान्तिरिवाद्वितीये सर्वानुस्यूते सर्वमये
ब्रह्मणि देवतिर्यङ्नरस्थावरस्त्रीपुरुषवर्णाश्रम-
बन्धमोक्षोपाधिनानात्मभेदकल्पित ज्ञानमज्ञानम् ।
सुखमिति च सच्चिदानन्दस्वरूपं ज्ञात्वानन्दरूपा
या स्थितिः सैव सुखम् । दुःखमिति अनात्मरूपः
विषयसङ्कल्प एव दुःखम् । स्वर्ग इति च सत्संसर्गः
स्वर्गः । नरक इति च असत्संसारविषयजनसंसर्ग एव
नरकः । बन्ध इति च अनाद्यविद्यावासनया जातोऽहमि-
त्यादिसङ्कल्पो बन्धः । पितृमातृसहोदरदारापत्य-
गृहारामक्षेत्रममता संसारावरणसङ्कल्पो बन्धः ।
कर्तृत्वाद्यहङ्कारसङ्कल्पो बन्धः । अणिमाद्यष्टैश्व-
र्याशासिद्धसङ्कल्पो बन्धः । देवमनुष्याद्युपासना-
कामसङ्कल्पो बन्धः । यमाद्यष्टाङ्गयोगसङ्कल्पो
बन्धः । वर्णाश्रमधर्मकर्मसङ्कल्पो बन्धः ।
आज्ञाभयसंशयात्मगुणसङ्कल्पो बन्धः । यागव्रत-

तपोदानविधिविधानज्ञानसम्भवो बन्धः । केवलमोक्षा-
पेक्षासङ्कल्पो बन्धः । सङ्कल्पमात्रसंभवो बन्धः ।
मोक्ष इति च नित्यानित्यवस्तुविचारादनित्यसंसारसुख-
दुःखविषयसमस्तक्षेत्रममताबन्धक्षयो मोक्षः ।
उपास्य इति च सर्वशरीरस्थचैतन्यब्रह्मप्रापको गुरुरुपास्यः ।
शिष्य इति च विद्याध्वस्तप्रपञ्चावगाहितज्ञानावशिष्टं
ब्रह्मैव शिष्यः । विद्वानिति च सर्वान्तरस्थस्वसंविद्रूपवि-
द्विद्वान् । मूढ इति च कर्तृत्वाद्यहङ्कारभावारूढो मूढः ।
आसुरमिति च ब्रह्मविष्णवीशानेन्द्रादीना-
मैश्वर्यकामनया निरशनजपाग्निहोत्रादि-
ष्वन्तरात्मानं सन्तापयति चात्युग्रराग-
द्वेषविहिंसा दम्भाद्यपेक्षितं तप आसुरम् ।
तप इति च ब्रह्म सत्यं जगन्मिथ्येत्यपरोक्ष-
ज्ञानाग्निना ब्रह्माद्यैश्वर्याशासिद्धसङ्कल्प-
बीजसन्तापं तपः । परमं पदमिति च
प्राणेन्द्रियाद्यन्तःकरणगुणादेः परतरं
सच्चिदानन्दमयं नित्यमुक्तब्रह्मस्थानं
परमं पदम् । ग्राह्यमिति च देशकालवस्तु-
परिच्छेदराहित्यचिन्मात्रस्वरूपं ग्राह्यम् ।
अग्राह्यमिति च स्वस्वरूपव्यतिरिक्तमायामय-
बुद्धीन्द्रियगोचरजगत्सत्यत्वचिन्तनमग्राह्यम् ।
संन्यासीति च सर्वधर्मान्परित्यज्य निर्ममो
निरहङ्कारो भूत्वा ब्रह्मेष्टं शरणमुपगम्य
तत्त्वमसि अहं ब्रह्मास्मि सर्वं खल्विदं ब्रह्म
नेह नानास्ति किञ्चनेत्यादिमहावाक्यार्था-
नुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य
निर्विकल्पसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी
स मुक्तः स पूज्यः स योगी स परमहंसः सोऽवधूतः
स ब्राह्मण इति । इदं निरालम्बोपनिषदं योऽधीते
गुर्वनुग्रहतः सोऽग्निपूतो भवति स वायुपूतो भवति
न स पुनरावर्तते न स पुनरावर्तते पुनर्नाभिजायते
पुनर्नाभिजायत इत्युपनिषत् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

